११.

१. माहेन्द्रग्रहणानन्तरमध्वर्युः सदस्येति आगच्छति।

२. होतृधिष्ण्यस्याग्रतो ऽध्वर्युः प्राङ्मुख उपविशति।

३. तं होतृधिष्ण्यस्याग्रत उपविष्टमध्वर्युं होता आह अध्वर्य उप नु रमा३ इति।

४. स होता उत्तरां प्रेङ्खस्थूणामध्वर्युं च उत्तरेण गत्वा प्राग्द्वारेण निष्क्रम्य पूर्वद्वारेणाग्नीध्रगृहं प्रपद्य आग्नीध्रीयं धिष्ण्यमुत्तरेण पर्येति आवर्तनेन सर्वतो गत्वा पश्चात्प्राङ्मुख उपविश्य दक्षिणजान्वक्तः सन् स्रुवेणाज्यस्थाल्याः सकाशादाज्यं गृहीत्वा वक्ष्यमाणैर्मन्त्रैरष्टावाहुतीर्जुहोति।

---

१२.

१. अष्टानामाहुतीनामियं प्रथमा।

२. मन्त्राणामल्पाक्षरत्वात्तिसृणामाहुतीनामत्रोत्तरत्रापि[१] सहोपादानम्।

३. गवे स्वाहेत्येवमादिभिस्त्रिभिर्मन्त्रैः स्वाहाकारान्तैरपरास्तिस्र आहुतयो होतव्याः।

४. यदिदमित्यादिना मन्त्रेणाष्टमीं हुत्वा वक्ष्यमाणं करोति।

५. स्रुवं स्थाल्यां मुक्त्वा वक्ष्यमाणं करोति।

---

१ A •हुतीनामन्त्रोत्तर•।

६. उत्तरेणाग्नीध्रीयं[1] धिष्ण्यं पर्येत्याग्नीध्रगृहात्पूर्वया द्वारा निःसृत्य सदसोऽग्रे गत्वा[2] अन्तःपात्यादुत्तरवेदिपर्यन्तरेखा स्रुतिसंज्ञका। तामुत्तरेण प्राङ्मुखस्तिष्ठन्परिमादसंज्ञकान् जपाञ्जपति।

७. अथैतान्परिमादाञ्जपाञ्जपति। कीदृश्येषा परिमादसंज्ञेति चिन्त्यते। रूढा वा [3]यौगिकी वेति। अत्र योगो न दृश्यते। अथ कथंचित् दृश्येत तथापि रूढिर्योगाद्बलीयसीति रूढिरेवाश्रयणीया।

८. अथ परिमादाञ्जपादनन्तरमत्रैव[4] सदसः पुरस्तात् स्रुतिमुत्तरेणैव तिष्ठन्पूर्वार्धपक्षं पुच्छाद्यङ्गयुक्तमग्निचयनमुपतिष्ठते होता।

---

## १३.

१. नमस्त इत्यादिना मन्त्रेण चयनस्य पूर्वभागमुपतिष्ठते।

२. नमस्ते रथन्तरायेत्येवमादिना मन्त्रेणाग्निचयनस्य दक्षिणं पक्षमुपतिष्ठते।

३. नमस्ते बृहत इत्येवमादिना मन्त्रेणाग्निचयनस्योत्तरं पक्षमुपतिष्ठते।

४. नमस्ते वामदेव्यायेत्येवमादिना मन्त्रेणाग्निचयनस्य मध्यमुपतिष्ठते।

---

१ C दक्षिणेन instead of उत्तरेण। २ A ०पर्यन्तं। ३ C ०गिकेवेति।
४ C ०मादाञ्जपानन्त०।

५. नमस्ते यज्ञायज्ञीयायेत्येवमादिना मन्त्रेणाग्निचयनस्य पुच्छमुपतिष्ठते।

६. यद्यपि यजुःशाखिनां महाव्रते चयनस्य नियमोऽस्ति तथाप्यस्मच्छाखायामेतस्मादेव सूत्रारम्भसामर्थ्यान्महाव्रते चयनस्य विकल्प इत्यनुमीयते। यदुत्तरवेदावग्निराहितो[1] भवति तथा सति समिद्धस्य दीप्तस्याग्नेरेव पूर्वार्धादिभागान् कल्पयित्वा क्रमेणोपतिष्ठत इत्यर्थः।

७. आदित्यदर्शनाय कुत्रचिद्गत्वोपस्थास्यत इति मत्वात्रैव तिष्ठन्नित्युच्यते। अथेत्यानन्तर्ये।

८. केचिदेवं वदन्ति। सदसः पुरस्तात्स्तुतिमुत्तरेण स्थित आदित्यमपश्यन् शालाया आकाशं कृत्वा तदन्तरालेनादित्यं दृष्ट्वोपतिष्ठते।

९. [2]शालाभेदनस्यायुक्तत्वात् यस्मिन्देश आदित्योऽस्ति तद्देशस्थमेवादित्यं ध्यात्वोपतिष्ठत इति सिद्धान्तः।

१०. आदित्यमुपतिष्ठत इत्युक्तम्। तत्रायं मन्त्रः करणत्वेन[3] विनियुज्यते।

११. अथ अनन्तरं दक्षिणेन बाहुनावृत्य सदः प्रविशेत् पूर्वोक्तेन संचरेण प्रेङ्खफलकस्य पश्चाद्गच्छेत्।

१२. प्रेङ्खस्य पश्चात्प्राङ्मुख उपविश्य तत्प्रेङ्खमन्वारभ्याविसृजन्वाग्यत आसीताथ समधिसृप्येति (१७. १६. ५) यावत्।

---

१ C ०ग्निरचितो। पूर्वार्धादिभ०। २ C शालाभेदे न युक्तत्वाद्। ३ A मन्त्रकरण०।

## १४.

१. स होता पुरस्तात्प्रथमं छन्दोगैः शीर्षण्यान् शिरोरूपान् ऋचान्निगादयेत्। गापयति।

२. स होता पुरस्तात्प्रथममेवाध्वर्युणा सह संवादं कुर्यात्। कथमित्याकाङ्क्षिते आह।

३. इतिकरणः संवादानन्तर्गत एव संवादस्यार्थ उच्यते। ब्रह्म जज्ञानं प्रथमं पुरस्तादियं पित्रे राष्ट्रयत्यग्रे विश्वे देवा मम शृण्वन्तु यज्ञिया इत्येतास्तिस्र ऋचः स तूष्णींशंस इत्येतस्य द्वादशसंख्याकपादसमुदायस्य तूष्णींशंससंज्ञा। हे अध्वर्यो तस्मिंस्तूष्णींशंसे प्रतिपादं[१] द्वादश प्रतिगरास्त्वया देया इत्यर्थः। आत्मनो विहृतत्वात्पदानुषङ्गानां वैपरीत्येन शंसनात्प्रतिगरस्यापि[२] वैपरीत्यमाशङ्क्य निराचष्टे[३]। होतैवमाह। हे अध्वर्यो अहं आत्मानं विहृतं पदानुषङ्गांश्च विहृतान् शंसिष्यामि तत्र त्वया अविहृत एव प्रतिगरो दातव्यः।

४. अत्रापि इतिकरणः संवादान्तताज्ञापनार्थः। अथ अनन्तरं होता प्रस्तोतारमाह। हे प्रस्तोतः तव यदा सप्त स्तोत्रियाः परिशिष्यन्ते तदा नः अस्मान् प्रतिब्रूतात्[४]। अवसरो वक्तव्यः। तस्मिन्नवसरे मम इदं वक्ष्यमाणं सं महानित्यादि जप्तव्यमस्ति।

५. परशाखीयमपि क्रमज्ञापनार्थमुच्यते। अथानन्तरमध्वर्युः पार्ष्ठिकं स्तोत्रमुपाकरोति।

---

१ A ins. इति। २ A वैपरीतम्। ३ A निराक्रियते। ४ C °ब्रिंसंति A °ब्रूयात्।

६. अथेतरे दीक्षिताः प्रतिपुरुषं बृसीः कुर्वत इत्युक्तम्। यत्र काले उद्गातासन्द्यारोहणं करोति तदानन्तरमेव प्रस्तोताप्रतिहर्तारावेव[1] बृस्यावारोहयतः।

७. एतत्सूत्रकरणसामर्थ्यादेव दीक्षितानां बृसीकरणकाले उपगातारोऽपि प्रतिपुरुषं बृसीः कृत्वास्मिन्काले ऽध्यारोहेयुरिति ज्ञायते।

८. कदाचिदपि पत्न्यः प्रथमं न प्रवादयेयुरित्येतदर्थमिदं सूत्रम्। प्रथमं वीणावादनमुद्गातैव कुर्यात्।

९. तमुद्गातारमनु पश्चात्पत्न्यो ऽपि वीणावादनं कुर्युः।

१०. पूर्वद्वारादिषु स्थापितान् दुन्दुभीन् वादनैर्वादयन्ति यजमानपुरुषाः।

११. तं तस्यैव लाङ्गूलेन काले (१७. ५. १०) भूमिदुन्दुभिमाघ्नन्तीत्युक्तम्। अतो ऽस्मिन्नवसरे तं दुन्दुभिमृषभस्य लाङ्गूलेनाहन्ति।

१२. स्तोत्रोपाकरणकाले बहवो घोषाः कर्तव्या इति सूत्रान्तरम्। तस्मादस्मिन्नवसरे महावादिनो[2]घोषान् कुर्वन्तीति।

१३. अथ या मार्जालीयं पर्यन्त्यो भवन्ति ताभ्यः प्रत्येकं नवान् कलशानुपकल्पयन्तीत्युक्तम्। अथानन्तरमुदकपूर्णान् घटान् बिभ्रत्यो दास्यो मार्जालीयं परियन्ति परिभ्रमणं कुर्वन्तीत्यर्थः।

१४. मार्जालीयं परिगच्छन्त्यो दास्यो हैमहा३ इदं मध्विदं मधु इत्येतां वाचं वदन्ति।

१५. अप्रादक्षिण्येन त्रिवारं भ्रमणं कुर्वन्तीति।

१ C ०र्तारावपि तावेव। २ A बहुघो०।

१६. तत ऊर्ध्वमप्रदक्षिणगमनानन्तरं प्रदक्षिणं त्रिस्तूष्णीं परियन्तीति।

---

## १५.

१. अथैतमश्वरथमुपकल्पयन्तीत्युक्तम्। अथ एतमुपक्लृप्तं रथमस्मिन्नवसरे युञ्जन्त्यध्वर्यवः क्व प्रदेशे युञ्जन्तीत्यपेक्षिते उच्यते।

२. दक्षिणवेद्यंसस्य पुरस्ताद्भागे युञ्जन्ति।

३. यथासंपन्नः क्षत्रियः संनद्धस्तीषु धनुरादाय तं रथमातिष्ठति

४. स राजा वा राजमात्रो वा अभितो वेदिं प्रदक्षिणं वर्तमानो भ्रमन्नुत्तरेणाग्नीध्रं प्राञ्चौ प्रक्के स्तूपे (१७. ५. ५) विभिन्न्याखणायेत्युक्तलक्षणमेतमाखणं त्रिः कृत्वा विध्यतीति।

५. तमाखणं पत्त्रसहितेन शरेण नातिविध्येत। आखणसंलग्नमेव[1] शरं करोतीत्यर्थः।

६. त्रिः प्रदक्षिणं विध्यतीति वेधस्य त्रित्वे सिद्धे ऽपि द्वितीयतृतीयशराभ्यां सपत्त्रवेधो मा भूदिति सूत्रात् आखणे त्रयो ऽपि शराः संलग्ना एव कर्तव्याः।

७. तं रथं प्राञ्चमुदञ्चमुत्तरपूर्वस्यां दिशि अश्नन्ति शिथिलयन्त्यध्वर्यवः।

८. तं रथं तत्रैव उत्तरपूर्वस्यामेव विमुञ्चन्ति योक्तारः।

---

[1] MSS. ‹आखण›०।

९. अथ यस्मिन्नवसरे प्रस्तोता स्तोत्रियाणां सप्तकं परिशिष्य वेलेत्याह तदा होत्रा किं कर्तव्यमित्युच्यते।

१०. अथ प्रस्तोत्रा वेलेत्युक्ते होता दक्षिणेन प्रादेशेन भूमिलग्नाङ्गुष्ठेन प्रेङ्खफलकं भूमिं च सहैव संस्पृशन् संमहान् महत्या दधादिति मन्त्रं जपति।

११. अथ प्रेङ्खफलकस्योपरि प्रागग्रं प्रादेशं निधाय सं देवो देव्या दधादिति मन्त्रं जपति।

१२. अथ प्रेङ्खफलकादुपरि प्रादेशमात्रे आकाशे प्रागग्रं प्रादेशं धारयन् सं ब्रह्म ब्राह्मण्या दधादिति मन्त्रं जपति।

१३. अथ प्रेङ्खफलकमग्रतः समीपे कृत्वा तस्मिन्प्रेङ्खफलकेऽग्रतः स्थिते त्रिरभ्यन्य त्रिःकृत्वः श्वासं मुक्त्वा त्रिरभ्यवानिति त्रिःकृत्वः श्वासं प्रतिगृह्णातीत्यर्थः :

---

## १६.

१. अथ अनन्तरमेतत्प्रेङ्खफलकमुरसा हृदयेन संस्पृश्य संलग्नं कृत्वा प्रेङ्खफलकस्य दक्षिणं भागमात्मनोऽतिहरन् हृदयात्पृथक् कुर्वन्नर्कोऽसीत्यादिकं मन्त्रं जपति। इतिकरणश्च मन्त्रान्त इति मन्त्रान्तज्ञापनार्थं इतिकरणः।

२. अथ दक्षिणं भागमात्मसंलग्नं कृत्वा उत्तरभागमात्मनोऽतिहरन् रुद्रास्त्वेत्यादिकं मन्त्रं जपति।

३. अथोत्तरं भागमुरःसंलग्नं कृत्वा दक्षिणं भागं हृदयस्तनप्रदेशात्पृथक् कुर्वन्नादित्यास्त्वेत्यादिकं साम्राज्यायेत्येवमन्तं मन्त्रं जपति।

४. अथ दक्षिणं भागमात्मसंसृष्टं[1] कृत्वा उत्तरं भागमात्मनो वियोजयन् विश्वे त्वा देवा इत्यादिकं कामप्रायेत्येवमन्तं मन्त्रं जपति।

५. अथ प्रेङ्खफलकरज्जू अन्तरेण समधिसृप्य आरुह्य प्रागग्रौ पादौ कृत्वा भूमौ सुस्थितौ करोति।

६. कृतव्याख्यानम्।

७. अथ भूमौ स्थापितौ पादौ प्रेङ्खफलकस्योपरि दक्षिणपूर्वौ नीत्वा[2] उपेत्याथास्मिन्पुत्रादयस्तिष्ठन्तीत्युक्तलक्षणदक्षिणभागोन्नतमुपस्थं कृत्वा दक्षिणपार्श्वप्रदेशेन[3] प्रागग्रेण दक्षिणेन प्रादेशेन[4] प्रेङ्खफलकस्य पश्चाद्भागमुपस्पृशति। प्रजापतिष्ट्वेत्येवमादिना मन्त्रेण। इतिकरणो मन्त्रान्तज्ञापनार्थः।

८. कृतव्याख्यानम्।

---

## १७.

१. अथ प्राञ्चमुभयहस्तसंनिवेशं कृत्वा[5] सं वागित्यादिकं स्वर्गमिय्यन्नित्येवमन्तं मन्त्रं जपति।

२. कृतव्याख्यानम्।

३. स होता विसृष्टो वाचो मत्सरो ऽन्यशुभद्वेषो यथा[6]

---

१ C संसृ०। २ C नीत्वा उपेत्य यस्मिन्। ३ C om. न। ४ C om. प्रादेशेन। ५ A ins. सं कृत्वा। ६ C (in marg.) ins. न।

भवति तथा विनिनीषमाण उपवचणं[1] स्तुतिपर आस्ते [2]यावत्स्तोत्रं प्रवदन्ति।

४. प्रस्तोतृप्रतिहर्तृउद्गातृअध्वर्युव्यतिरिक्ताः[3] सर्वे गृहपतिसहिता दीक्षिता ऋत्विजो वा यत्र अथ समधिसृप्येत्येतस्मिन्नवसरे होता प्रेङ्खावरोहणं करोति तदा इमीरधिसर्पेयुः धिष्ण्यवन्तो धिष्ण्यसंनिधौ अपरेण होतुः पश्चादिति प्रकृतिसिद्धम्।

५. यदा उद्गातृणामुत्तमा स्तोत्रिया परिशिष्यते तदा स्तोत्रे स्तूयमाने वाद्यमानान् दुन्दुभीनवतृणन्ति। उपरमयति होता।

६. स्तोत्रे स्तूयमाने वाद्यमानं भूमिदुन्दुभिमुपरमयति।

७. उद्गातुरासन्द्यारोहणकाले कुर्वन्ति घोषं घोषकृत इत्युक्तम्। अस्मिन्नवसरे उत्तमस्तोत्रियापरिशेषे[4] ते ऽप्युपरमन्तीति।

८. अथ अस्मिन्नप्यवसरे दास्यो मार्जालीयं परिभ्रमन्ति पूर्ववदिति नोक्तत्वात्सकृदेवेति गम्यते।

९. ता दास्यस्तानुदकपूर्णान् घटान् मार्जालीये निनीय उपनिधाय तत्रैवमुक्त्वा यथागतं गच्छन्तीति।

१०. वाग्यमनावध्यर्थं सूत्रम्।

११. प्रस्तोत्रा एषेति प्रोक्ते होता वाग्यमनं करोति तावद् यावदनुवषट्कारं करोति।

१२. प्रतिहारसंनिधावाहावं बुद्धिस्थं करोतीत्यर्थः।

१३. उत्तमात्प्रतीहारादूर्ध्वमाहूय (७. १० २.) शंसतीत्युक्तत्वात्तदनन्तर एव आहावो युक्तः।

---

१ A om. व। २ C ins. तावत्। ३ C om. अध्वर्यु। ४ C स्तोत्रियाय।

१४. यथास्य होतुर्वाक् वाणी सर्वा अन्या वाचो ऽतिक्रम्य[1] वदति तथातितरामुच्चैराहूय त्रिरुपांशु हिंकृत्य तूष्णींशंसं शंसतीति संबन्धः।

१५. पूर्वसूत्रे आहावधर्मोपदेशः। अत्र तमेवाहावमनूद्य तूष्णींशंससंबन्धं विधाय तस्य तूष्णींशंसस्यातः परं विधिरुच्यत इति शेषः।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति द्विरभ्यस्तम्।

## इति महाव्रतभाष्ये प्रथमो ऽध्यायः समाप्तः।



१ C क्रम्यते।

# अथाष्टादशो ऽध्यायः।



१. यथास्य वाक् सर्वा अन्या वाचो ऽतिवदेदित्यनेन प्रकारेण उच्चैस्तरामाहावं कृत्वाहावान्तेन प्रणवेन प्रथमस्य हिंकारस्य प्राणसंधानं कृत्वा मकारेणावसानं कार्यम्। ततो द्वितीयो हिंकारो मकारान्तः कर्तव्यः। ततस्तृतीयं हिंकारं मकारान्तमेव कृत्वा प्राणसंततं तूष्णींशंसस्य संधानं कार्यम्। श्रुतिरपि प्रथमस्य हिंकारस्याहावेन सह प्राणसंधानं दर्शयति। हिंकारेण प्रतिपद्यत एतदुक्थम् प्राणो वै हिंकारः प्राणेनैवैतदुक्थं प्रतिपद्यत इति। प्रतिपदः प्राणरूपेण संस्तवात्प्राणसंततमाहावस्य हिंकारेण प्रथमेन गम्यते। ननु आहावस्योच्चैष्ट्वाद्धिंकारस्योपांशुत्वात्सहसंधानं न युज्यत इति चेत्। सत्यम्। न दोषः। आश्वलायने उपांशुयाजे प्रणवयेयजामहवषट्काराणामुच्चैष्ट्वे याज्यापुरोनुवाक्ययोरुपांशुत्वे प्राणसंधानस्य दर्शनात् प्राणसंततः प्रणवः पुरोनुवाक्यायास्तथागूर्वषट्काराविति। आगूरिति तेषां येयजामहस्य संज्ञा। एवमत्रापि उच्चैराहावं कृत्वा उपांशुधर्मकेण मकारान्तेन हिंकारेणावसानं ततो ऽसंहितमेव द्वितीयं हिंकारं मकारान्तं कृत्वा ततस्तृतीयेन मकारान्तेन हिंकारेण संततेन तूष्णींशंसपादस्य[1] संधानं कार्यम्।

---

१ A तूष्णींशंसः

२. ब्रह्म जज्ञानमित्याद्यानां तिसृणामृचां तूष्णींशंससंज्ञा। तास्वोपांशुधर्मकाः सप्रणवो द्वितीयश्च चतुर्थश्चेति (७. १६. ५) प्राप्ते[1] प्रणवमकुर्वन्[2] पच्छः शंसेत्। अथैतं तूष्णींशंसमुपांशु शंसति। वाग्वा एतदह्न[3] मनस्तूष्णींशंसो मनसैव तद्वाचं समर्धयतीति श्रुतेः।

३. मध्यमया माध्यन्दिनमुच्चैस्तरां मरुत्वतीयान्निष्केवल्यमिति (८. १४. ३. ४) सकलस्य निष्केवल्यशस्त्रस्य मरुत्वतीयशस्त्रादुच्चैस्तरां मध्यमस्वरे प्राप्ते ऽपि शस्त्रारम्भे आहावस्योच्चैष्ट्वात्तूष्णींशंसस्योपांशुत्वादात्मने वाचमुत्सृजतीत्यात्मशब्देन सकलं परिधानीयान्तं शस्त्रमुपलक्ष्य प्रकृतिप्राप्तो मध्यमस्वरो ऽनूद्यते।

४. तस्य पञ्चविंशः स्तोमो राजनं पृष्ठमित्युक्तम् (१७.७.३.४)। तस्य पृष्ठस्यायं स्तोत्रियस्तृचः। ननु स्तोत्रियं शस्त्रानुरूपं शंसन्तीति स्तोत्रियानुरूपयोः सर्वत्र साहचर्यम्। कथं तर्ह्यत्रानुरूपाभाव इति कथं ज्ञायते ऽत्रानुरूपाभाव इति। अनुक्तत्वादिति ब्रूमः। नैतद्युक्तम्। नवर्चमिदं सूक्तं तन्मध्ये प्रथमस्तृचः स्तोत्रियत्वेन विहितः साहचर्याद्परो ऽप्यनुरूपत्वेनानुमीयतां को दोष इति चेत्। न हि वचनमन्तरेण द्वितीयस्तृचो ऽनुरूपत्वेन भवितुमर्हति। अनुरूपाभावे ज्ञापकमप्यस्ति त्रिरेवाह्वयते स्तोत्रिये निविदे परिधानीयाया इति (१८. २१. ३)। त्रिष्वेव स्थानेष्वाहावचनात् ज्ञायते नात्र कश्चित्तृचो[4] ऽनुरूपत्वेन शस्यत इति चेच्छस्यते तर्ह्याहावेन[5] भाव्यम्। स तु नास्ति तस्मात्तदभाव एव[6] वैषम्यादपि द्वितीयस्तृचो ऽनुरूप-

१ C प्राप्त। २ C (in marg.) संतनीयमन्ते कुर्वन्। ३ A एतदहन्मनि C अहमन०। ४ C कासेत्। ५ A तर्ह्येमिर्हितेन। ६ C om. एष।

त्वेन न भवति। कथं वैषम्यम्। स्तोत्रियस्य प्रथमस्य तृचस्यान्त्यो ऽर्धर्च उत्सृज्यते न द्वितीयस्य तृचस्य तस्मादपि द्वितीयस्तृचो नानुरूपत्वेन शस्तव्य इति। पञ्चविंशात्मस्वरूपसिद्ध्यर्थमेव तस्य शंसनमुच्यते। तस्माद्यानुरूपाभाव इति मन्तव्यम्।

५. पञ्चविंशात्मके आत्मनि प्रथमायाः सकृद्ग्रहणेन एता नवर्चः संख्येयाः।

६. स एष आत्मा पञ्चविंश इत्यग्रे (१८. १. ११) वक्ष्यते। तस्मिन्नात्मनि एता अष्टौ संख्येयाः।

७. पञ्चविंशात्मकमध्ये गण्यते।

८. पञ्चविंशात्मनि मध्ये गण्यन्ते।

९. प्रथमायाः सकृद्ग्रहणेनैतास्त्रयोविंशतिसंख्याका भवन्ति।

१०. संपद्यत इति शेषः।

११. तदिदास भुवनेषु ज्येष्ठमिति एवमादिकः पञ्चविंशत्यृक्संख्याकः पञ्चविंश आत्मसंज्ञको[१] भवति।

१२. तमात्मानं नदेन नदं व ओदतीनामित्येतया पादश उपसृष्टं संयुक्तं शंसति।

१३. पूर्वसूत्रे नदेनोपसृष्टं शंसतीत्युक्तम्। तत्र न ज्ञायते नदशब्देन किमुच्यत इति। प्रदर्शनार्थं प्रतीकग्रहणम्। नदशब्देनेयमृगुच्यत इत्यर्थः।

१४. तं नदेनोपसृष्टं शंसतीत्युक्तम्। उपसर्गस्तूभयथापि भव-

१ A om. आत्म।

तीति त्रैष्टुभानां पादानां पूर्वप्रयोगनियमार्थं वचनम्। तस्यैव प्रयोगप्रकारं विवरीतुमाह।

१५. तदिदास भुवनेषु ज्येष्ठं नदं व ओदतीनाम्।

१६. यतो जज्ञ उग्रस्त्वेषनृम्णो नदं योयुवतीनो इति।

१७. सद्यो जज्ञानो नि रिणाति शत्रून्पतिं वो अघ्न्यानामिति।

१८. अनु यं विश्वे मदन्त्यूमा धेनूनामिषुध्यसोमिति।

१९. एवं नदेन विहृतामित्यर्थः।

२०. प्रथमा व्यतिरिक्ता। उत्तरा द्वाविंशतिमृचो[१] नदेन विहृता[२] अनावृत्ताः शंसति।

२१. एवं नदेन विहृता तदिदासीयसूक्तस्य[३] या तृतीया ऋक् तस्या उत्तरमर्धर्चमुत्सृजति नदस्योत्तरम्। एवं द्वावर्धर्चावुत्सृजति। स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम्। अदः सु मधु मधुनाभि योधीः धेनूनामिषुध्यसो इति।

२२. तौ इत उद्धृतावर्धर्चौ द्विपदानामिमा नु कमित्याद्यानां पुरस्ताच्छंसेत्।

२३. पूर्वोक्तं पञ्चविंशाख्यमात्मानं शस्त्वा तदनन्तरं सूददोहसं शंसेत्। सूददोहःशब्देन[४] किमुच्यत इति प्रदर्शनार्थं प्रतीकग्रहणं ता अस्य सूददोहस इति। अर्धर्चशःशंसनं प्राप्तमेवानूद्यते।

---

१ A ०तिर्च्छ० C ०तिष्ठ०। २ C om. नदन विहृता च। ३ C om. तदिदासीय A in marg. ४ C ०दोहस इति।

## २.

१. अथो यमेवैतमृङ्मयं यजुर्मयं साममयं पुरुषं संस्कुर्वन्तीति श्रुतौ पुरुषरूपेण संस्तवात्तस्य शीर्षसंबन्धीनि शीर्षण्यानि त्रीणि वा अस्य शीर्ष्णः कपालानि भवन्तीत्यर्थवादात्त्रीण्येव तानि भवन्ति।

२. इन्द्रमिद्गाथिन[1] इन्द्रो दधीच उद्वेदभि श्रुतामघमुदु त्यं जातवेदसमित्येतेषु[2] सामगाः स्तुवन्ति। अत एतान्येव शंसेत्। तत्रेन्द्रमिद्गाथिन इत्यत्र तृचे प्रथमाद्वतीयाचतुर्थीषु स्तुवते अतः ताः शंसेत्।

३. छन्दोगवशात्पक्षान्तरमेतत्।

४. ते छन्दोगा यदि तथा कुर्वन्ति तदास्माभिः किं कर्तव्यमित्यत आह।

५. नवर्चमिति शेषः।

६. छन्दोगानां विकल्पो ऽस्ति नवर्चं स्तोतव्यं तृचे वेति।

७. छन्दोगैः प्रथमे तृचे स्तुते ऽस्माभिः किं कर्तव्यमित्याह।

८. इन्द्रमिद्गाथिन इत्यादीनां पञ्चानां तृचानां[3] मध्ये ये द्वे तृचे इन्द्रेत्ते उदु त्यं जातवेदसमित्येतस्मात्तृचात्परे शंसेत्।

९. महति शस्त्रे विस्मृतिशङ्कया प्राप्त एव शस्त्रधर्मः[4] सर्वत्रानूद्यते।

---

१ A C (sec. h.) om. the vers इन्द्रेण सं हि contained in the text of the Sūtra. C in marg. उत्तिष्ठन्नोजसा। २ C (in marg.) पञ्चानां तृचानां। ३ A om. तृचानां। ४ C शस्त्रधर्मः।

## ३.

१. पुरुषस्य ग्रीवारूपमित्यर्थः ।

२. अस्य तृचस्य शाखान्तरीयत्वात्सकलपाठः ।

३. तं द्वैवं तृचमित्यर्थः ।

---

## ४.

१. अथैतामचां शंसति । सा वै त्रिष्टुप् भवतीति श्रुतेः ।

२. शस्त्रधर्मः प्राप्त एवानूद्यते ।

३. अस्तोत्रियत्वे ऽपि ककुप्कारप्रापणार्थं[१] वचनम् ।

४. अत्राप्यननुरूपत्वात् ककुप्कारप्रापणार्थं[२] वचनम् ।

५. प्राप्त एव शस्त्रस्यानुवादः ।

६. अर्धर्चशंसनं प्राप्तमेवानूद्यते ।

७. तदिमौ पच्चौ व्यतिषजत्यविवर्हायेति श्रुतेः ।

८. अथैतं प्रहस्तकं शंसति । ता वै तिस्र ऋचो भवन्ति[३] । त्रीणि वा अस्य पाणेः पर्वाणि भवन्तीति श्रुतेः ।

९. निगद्व्याख्यानम् ।

---

१ A ins. त्व। २ A om. प्रापणार्थं। ३ C ins. इति।

५.

१. इयं द्वितीयाच्चा। अचाशब्देन[1] बाहुरुच्यते। स्थ्वा त इन्द्र स्थविरस्य बाहू इति बाह्वोरभिरूपेति श्रुतत्वात्।

२. कृतव्याख्यानम्।

३. पूर्ववद्व्याख्यानम्।

४. कृतव्याख्यानम्।

५. शस्त्रभेदाभावात्।

६. कृतव्याख्यानम्।

७. पञ्चव्यतिषञ्जनार्थम्।

८. सुगतार्थम्।

९. कृतव्याख्यानम्।

१०. अयमपि प्राप्तानुवादः

११. प्रवस्तकसंज्ञकं तृचमित्यर्थः।

---

६.

१. वक्ष्यमाणानीत्यर्थः। चतुरुत्तराणि चतुर्विंशत्यक्षरादीनि चतुर्भिश्चतुर्भिरक्षरैरधिकानां सप्तानां छन्दसां सप्त तृचानि।

२. गायत्र्युष्णिगनुष्टुब्बृहतीनामित्यर्थः।

३. सुगतार्थम्।

---

१ C अचशब्देन।

४. द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौतीति धर्मकम् ।

५. पृथक्सूत्रकरणं ग्रन्थभेदात्[1] ।

६. गतार्थम् ।

---

७.

१. गायत्रीबृहत्युष्णिहामित्यर्थः ।

२. एतया ऋचा[2] अशीतितृचात्मके गायत्रीछन्दस्क ऋग्गणः प्रारभ्यते ।

३. अशीतिमध्ये गणयन्ते ।

४. अशीतिमध्ये तृचा गणयन्ते ।

५. अशीतिमध्ये गणयन्ते ।

६. अशीतिमध्ये गणयन्ते ।

७. तानि समस्तानि परिगणितानि चत्वारिंशत्तृचानि भवन्ति ।

८. पूर्वो भाग इत्यर्थः ।

९. अपरो भाग इत्यर्थः ।

१०. गायत्र्यशीतिमध्ये गणयन्ते ।

११. १२. १३. १४. १५. resp. अशीतिमध्ये गणयन्ते ।

१६. शीर्षण्यतृचमध्ये उत्तिष्ठन्नोजसेति तृचः श्रुतः। तस्मिन्यदा छन्दोगाः स्तुवन्ति तदात्र तमुद्धरेत् ।

---

१ C ग्रन्थभेदात् । २ C गायत्र्या instead of ऋचा ।

१७. यदि शीर्षण्यतृचमध्ये अस्मिन्न स्तुवते तथाप्यशीतिमध्ये उद्धरेदेव।

१८. अशीतिमध्ये गण्यन्ते।

१९. तानि समस्तानि उत्तरभागसंबन्धीनि चत्वारिंशत्तृचानि भवन्ति।

२०. गायत्र्यशीत्या उत्तरो भागः। इयमेव दक्षिणं पार्श्वं गायत्री सव्यमौष्णिही मध्यं बार्हतीत्यात्मनो ऽङ्गसंपादनं दृष्टम्। अतश्च कपक्षशब्दो भागवचन इति युक्तम्। पूर्वोत्तरभागकरणप्रयोजनं चिन्त्यम्।

२१. आहावकपक्षादन्तराशंसनम्।

---

## ८.

१. बृहतीसंबन्धिनीमशीतिं प्रारभत इत्यर्थः।

२. बृहतीसहस्रं संपद्यत इति वक्ष्यते। तत्रेमाः प्रत्यक्षबृहत्यो ऽन्याः संपादिताः।

३. ता विंशतिः प्रत्यक्षबृहत्य इत्यग्रे (१८. १०. ४) वक्ष्यते। तत्रैतास्तिस्रो भवन्ति।

४. विंशतिमध्ये गण्येते।

५. विंशतिमध्ये गण्यन्ते।

६. चत्वारिंशत्प्रगाथानां पुरतः परतश्च विंशतिर्विंशतिः प्रत्यक्षबृहत्यः शस्यन्ते। तत्र याः पुरतः शस्यन्ते ता एताः प्रत्यक्षबृहत्यः।

७. शस्यन्त इति वाक्यशेषः।

८. ते चत्वारिंशत्प्रगाथा इत्यग्रे (१८. १०. १३) वक्ष्यते। तत्रैते चत्वारो भवन्ति।

९. रायस्काम इत्येतां द्विपदामुद्धृत्य मो षु त्वेत्यादिकाश्चत्वारः प्रगाथा भवन्ति।

१०. चत्वारिंशन्मध्ये भवन्ति।

११. [1]चत्वारिंशति प्रतिप्रतीकं द्वौद्वौ भवतः।

१२. चत्वारिंशन्मध्ये गण्यन्ते।

१३. चत्वारिंशत्प्रगाथेषु गण्येते।

१४. चत्वारिंशन्मध्ये गण्यन्ते।

१५. प्रगाथा भवन्ति।

१६. यः शक्र इत्यादीनां षण्णां प्रगाथानां मध्ये त्रयः प्रगाथाः शस्यन्ते त्रीन्परिशिनष्टि। उत्तरचत्वारिंशतः प्रारम्भणार्थम्।

१७. ये निविदः पूर्वतः प्रत्यचवृहतीविंशतिद्वयमध्ये[2] शस्यन्ते त इमे चत्वारिंशत्प्रगाथाः।

---

## ९.

१. अथ चत्वारिंशत्प्रगाथानन्तरमित्यर्थः।

२. प्रत्यचवृहत्यो भवन्ति।

---

१ A ins. प्रगाथा।  २ C ०बृहतीः।

३. महे चन त्वामित्यादीनां विंशतिं शस्त्वानन्तरं सूददोहसं शंसति ।

४. निविद्धीयते यस्यां सा निविद्धानीया ।

५. तां निविद्धानीयां पच्छः शस्त्वा शोंसावो३ इत्याहूय निविदं दधाति ।

६. तां निविदं पच्छः पादेन व्यवगृह्य समग्रसूक्तां शस्त्वा इत्यर्थः ।

७. निवित्पदानां मध्ये यदुत्तममन्त्यं तेन प्रणवं कृत्वा सजातेभिर्वृत्रहा सेदु हव्यैरित्येतां निविदा सह निवित्संलग्नां शंसतीत्यर्थः।

८. तां सजातेभिरित्येतां त्रिष्टुभावन्तरेण त्रिष्टुम्नैविदी[१] वैश्वामित्र्यावर्कवत्यावभिरूपे इति श्रुतेः ।

---

## १०.

१. यथा निविदः पूर्वभागे गायत्र्यशीतिः सूददोहा विंशतिः प्रत्यवरूढत्यः चत्वारिंशत्प्रगाथाः पुनर्विंशतिः प्रत्यवरूढत्यः सूददोहा निविद्धानीया निविच्चेत्येवं क्रमः तथा निविदुत्तरभागेऽपि निवित्संशंसनीया[२] सूददोहाः पञ्चविंशतिः प्रत्यवरूढत्यः चत्वारिंशत्प्रगाथाः पुनर्विंशतिः प्रत्यवरूढत्यः सूददोहा औष्णिह्यशीतिरिति ।

२. महे चन त्वामद्रिव इत्यादिपञ्चविंशतेर्याः पञ्च परिशिष्टास्ताः[३] शंसति ।

---

१ A त्रिष्टुम्नैविदि। २ A ( in marg. ) सजातेभिरिति। ३ A in marg. त्वा त्वा रथ इत्याद्याः।

३. प्रत्यचर्चहत्यो भवन्ति ।

४. परिशिष्टाभिः पञ्चभिः सहेत्यर्थः ।

५. उक्तार्थम् ।

६. तेषां चौनादत्त इत्युक्तम्। तान् प्रथमतः शंसति ।

७. चत्वारिंशति प्रगाथा भवन्ति ।

८. चत्वारिंशति भवति ।

९. चत्वारिंशति भवन्ति।

१०. प्रगाथा भवन्ति ।

११. चत्वारिंशत्प्रगाथेषु गण्यन्ते ।

१२. सूक्तषट्के ऽष्टाविंशतिः प्रगाथास्तन्मध्ये द्वावुद्धृत्य षड्विंशतिप्रगाथान् शंसति ।

१३. पूर्वं चतुर्दश वालखिल्यानां षड्विंशतिरेवमेते चत्वारिंशत्प्रगाथा भवन्ति।

---

## ११.

१. सुगमम् ।

२. प्रत्यचर्चहत्यो भवन्ति ।

३. अस्मिन् सूक्तद्वये दश प्रत्यचर्चहत्यो भवन्ति ।

४. ते सूक्ते अर्धर्चशस्ये शस्त्वाय वार्हत्यशीतिसमाप्यनन्तरं सूदोहसं शंसति ।

---

## १२.

१. एतयोष्णिक्छन्दस्कामशीतिं प्रारभते।

२. तानि षट्त्रिंशत्तृचानीत्यग्रे (१८. १२. ७) वक्ष्यते। तन्मध्ये एतान्येकादश भवन्ति।

३. एतस्मिन्नुद्धृते षट्त्रिंशत्तृचमध्ये दश तृचानि भवन्ति।

४. षट्त्रिंशन्मध्ये भवन्ति।

५. षट्त्रिंशन्मध्ये भवन्ति।

६. षट्त्रिंशन्मध्ये भवतः।

७. तानि समस्तानि षट्त्रिंशत्तृचानि भवन्तीत्यर्थः। एताः षट्त्रिंशत्प्रत्यचौष्णिहस्तृचाः (!)।

---

## १३.

१. औष्णिह्यशीतिसंपादनार्थम्।

२. चतुःशतमध्ये गण्यन्ते।

३. चतुःशतमध्ये गण्यन्ते।

४. चतुःशतमध्ये सूक्ते भवतः।

५. चतुःशतमध्ये सूक्ते भवतः।

६. चतुःशतमध्ये सूक्ते भवतः।

७. चतुःशतमध्ये भवन्ति।

८. श्रौष्णिहश्शीतिमध्ये शंसतीत्यर्थः।

९. श्रौष्णिहश्शीतिमध्ये शस्यन्ते।

१०. द्वादशौष्णिहश्शीतिमध्ये भवन्ति।

११. शस्यधर्मः प्राप्त एवानूद्यते ऽसंदेहार्थम्। इन्द्राय साम गायतेति तद्यदेतदन्ततः शंसति संसिद्धाभिरुष्णिग्भिर्वशं समारोहाणीति श्रुतेः।

---

## १४.

१. वशशब्देन वशर्षिसंबन्धि सूक्तं लक्ष्यते। अर्धर्चशस्यमौत्सर्गिकम्।

२. वशशब्देन किमुच्यत इति संदेहव्युदासार्थं प्रतीकग्रहणं त्वावतः पुरूवसो इति।

३. विशेषस्त्वर्धर्चशस्यमपवदति। तस्य वशस्य सप्तदशी ऋग् जगतीछन्दस्का। तां पच्छः शंसति।

४. द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामिति (७. २६. ३) पङ्क्तिशंसनधर्म उक्तस्तद्धर्मकाः शंसन्तीत्यर्थः।

५. द्वाभ्यामवसायद्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामित्युक्तम्। तदिह न भवति वचनात्।

६. अस्मिन्सूक्ते छन्दोबहुत्वात्प्राप्तो ऽपि शस्यधर्मो ऽनूद्यते।

७. तौ पुरस्ताद्विपदानां शंसतीत्युक्तम् (१८. १. २२)। अतो ऽत्र शंसनं वचनात्।

८. अर्धर्चद्वयं मिलितं स्तोत्वविशिष्टेन तच्छब्देन परामृश्यते। सा

स्वादोः स्वादीयः स्वादुना सृजा सं पतिं वो अघ्न्यानाम्।

अदः सु मधु मधुनाभि योधीर्धेनूनामिषुध्यसो॥

इतीयमृक्[1]। तत आत्मन एवोत्सृज्यते। अतो ऽत्र शस्तव्या एवेत्येतदर्थं वचनम्।

९. सूददोहसः परिगणनमिदम्। आत्मनो ऽसंभवात्। ता अस्य सूददोहस इत्येषा अत्र द्विपदानां प्राक्शंसने चतुर्विंशतितमः शस्ता भवति।

---

## १५.

१. अथेति वशशंसनानन्तरम्।

२. ता एकविंशतिर्द्विपदा इत्यग्रे (१८.१५.७) वक्ष्यते। तत्रैताः पञ्च गण्यन्ते।

३ ४. ५. resp. एकविंशतिमध्ये गण्यन्ते।

६. आ धूर्ष्वस्मै दधाताश्वान्। वज्रमेको बिभर्ति हस्त आहितम्। अया वाजं देवहितं सनेमेत्येतास्तिस्र एकविंशतिमध्ये गण्यन्ते।

७. ता एता एकविंशतिर्द्विपदा भवन्ति। ताः पच्छः शस्यन्ते।

---

(१) १०. १२०. ३। ८. ६९. २।

१६.

१. गायत्रीशंसमिति द्वाभ्यामवसायैकेन प्रणौति द्वाभ्यामवसायैकेनाष्टाचरस्तु प्रणवनीयः ( ७. २६. १० ) इत्येतद्धर्मयुक्तम् ।

२. एकेनावसाय सप्तपदानां द्वाभ्यां प्रणौति द्वाभ्यामवसाय (७. २६. ११ ) द्वाभ्यामित्येतद्धर्मव्यावृत्त्यर्थमिदं सूत्रम् । शंसं गायत्रीमुत्तरामिति उत्तरा गायत्रीवच्छस्तव्येत्यर्थः । द्वाभ्यामवसायैकेन प्रणौति ।

३. विस्पष्टार्थं वचनम् ।

---

१७.

१. आवपनमिति छन्दसामन्वर्थसंज्ञा । कियन्ति च्छन्दांस्युच्यन्ते । जागतपाङ्क्तवैराजानुष्टुभानि । एकाधिकसूक्ततृचानि शंसतीत्यर्थः । चतुरुत्तरतृचेषु च्छन्दसामानुलोम्येन तृचानि शस्यन्ते । अत्र तु तद्वैपरीत्यम् । अथो एतान्येव पुनरर्वाचीनि भवन्तीति श्रुतौ दृष्टत्वात् ।

२. जगतीच्छन्दस्का ।

३. जगतीच्छन्दस्काः पञ्चैका त्रिष्टुप्[१] ।

४. प्राप्त एव शस्यधर्मा ऽनूद्यते विस्पष्टार्थम् ।

५. द्वाभ्यामवसाय द्वाभ्यामवसायैकेन प्रणौति पङ्क्तीनामित्येतद्धर्मकम् ।

---

१ C om. the last three words.

६ अत्रापि प्राप्त एव धर्मो ऽनूद्यते ।

७. एतानि चत्वारि छन्दांस्यावपनसंज्ञकान्यवरोहेण शस्तव्यानि।

---

## १८.

१. आनुष्टुभमिति समूहार्थे भिक्षादित्वादण् (पा० ४. २. ३७. ३८)। अनुष्टुप्समुदायं शंसतीत्यर्थः। समाम्नायं समाम्नायक्रमविशिष्टम्। गायन्ति त्वेत्यारभ्य शास इत्थेत्येतत्पर्यन्तं समाम्नायक्रमेणानुष्टुप्समुदायं शंसतीत्यर्थः। गायन्ति त्वेत्यस्य प्रथमस्तृचश्चतुरुत्तरत्वेषु शस्तत्वात्परित्यक्तः।

२. आनुष्टुभे गणयन्ते।

३. अनुष्टुप्समुदाये गणयन्ते।

४. गणयन्ते[1]। अस्मिन् सूक्ते षडेवानुष्टुभः॥ मत्स्यपायि ते मह इत्येकपातिनीषु दशसु बृहतीषु शस्तत्वादुत्सृष्टा। उभयोः सूक्तयोरन्त्या त्रिष्टुबुत्सृष्टा।

५. गणयन्ते।

६. अन्त्या पङ्क्तिरुत्सृष्टा।

७. गणयेते।

८. अन्त्या पङ्क्तिरुत्सृष्टा।

९. अस्मिन्सूक्ते षडेवानुष्टुभः।

---

१ C om. the first six words.

१०. अन्त्यस्तृचो गायत्रः परित्यक्तः।

११. स प्रत्नथा कविवृध इति तृचमर्कवत्तेन समृद्धं गायत्र्युत्तमा तथा समृद्धमिति श्रुतेः।

१२. गण्येते।

१३. नव गण्यन्ते।

१४. पञ्च गण्यन्ते।

१५. तत्सर्वमानुष्टुभमनुष्टुप्समुदायो ऽर्धर्चशः शस्यते।

---

## १९.

१. अथानन्तरमेतत् वक्ष्यमाणं त्रिष्टुभां शतं शंसेत्।

२. इन्द्रस्य नु वीर्याणि प्र वोचमित्येतत्पञ्चदशर्चं त्रिष्टुप्शते प्रथमं शस्यते।

३. या त ऊतिरवमा या परमेत्येतन्नवर्चं शंसति।

४. यो जात एव प्रथमो मनस्वानित्येतत्पञ्चदशर्चम्। चकारः सर्वत्र समुच्चये।

५. द्वादशर्चं चैतत्।

६. अष्टर्चपञ्चर्चे विश्वामित्रस्य शंसेद्विश्वामित्रो ह्येनदपश्यदिति श्रुतेः।

७. विश्वामित्रस्य शंसेदित्युक्तम्।

८. एकविंशर्चं वामदेवस्य शंसेद्वामं ह्येतद्देवानामिति श्रुतेः।

९. यज्ञर्च वसिष्ठस्य शंसेदावसिष्ठं होतृदेवानामिति श्रुतेः। एवमेतत्परिधानीयावसहृणने त्रिष्टुभां शतम्।

१०. तत्र त्रिष्टुप्शते वासिष्ठसूक्तद्वये[1] उदु ब्रह्माण्यैरत श्रवस्येत्येतस्य सूक्तस्य पुरस्तात्पदानुषङ्गान्वक्ष्यमाणाञ्छंसति। तदर्थं यो व्यतीँरफाणयदित्येतस्मिंस्तृचे प्रथमाया अर्धर्चं शस्त्वा उपरमति। यूयं पात स्वस्तिभिः सदा नो३यो व्यतीँरफाणयत्सुयुक्ताँ उप दाशुषे इति।

---

## २०.

१. तक्वो नेता तदिद्वपुरतीदु शक्र ओहतो इति।

२. यथा उपमा यो अमुच्यतेन्द्रो विश्वा अति द्विष इति।

३. यथा भिनत्कनीन ओदनमर्भको न कुमारको इति।

४. यथा पच्यमानं परो गिराधि तिष्ठन्नवं रथमिति।

५. यथा स पचन्महिषं मृगं पित्रे मात्रे विभुक्रतो[2]। उदु ब्रह्माण्यैरत श्रवस्या इति।

६. शों३सावो३ एवेदिन्द्रं वृषणमिति।

७. त्रिष्टुप्शते सहृणितत्वात्संदेहव्युदासार्थं प्राप्तार्थानुवादः।

८. नितरां परिधानीयां शस्त्वा समालभीत्यादि जपित्वा महद्सीत्यादि जपति।

---

१ C ins. वा। २ ऋग्वेद ८. ६९. १२-१५

## २१.

१. चतुर्विंशतिकल्वः शस्तापि सूददोहास्ता अस्य सूददोहस इत्येषा सकृदेव गण्यते । यावच्छस्त्रं शस्ते यावत्य ऋचः शस्यन्ते तावतीनां सहस्रं बृहत्यः संपद्यन्त इत्यन्वयः । तं नदेनोपसृष्टं शंस-तीत्युक्तम् । अतो नदं व ओदतीनामित्येषा ऋगुपसर्जनी । सा [1]पञ्चविंशतिकल्वः शस्तापि बृहतीसंपत्त्यर्थं गण्यत एव । ऋते तूष्णीं शंसमिति ब्रह्म जज्ञानमित्येतास्तिस्र ऋचो बृहतीसंपत्तये[2] न गण्यन्ते ।

२. स्तोत्रियायाहावो ऽनुरूपाय धाय्यायै प्रगाथाय सूक्ताय निविदे परिधानीयायै चेत्यनेन सप्तसु स्थानेषु प्राप्त आहावस्त्रिष्वेव नियम्यते ।

३. स्थाननियमार्थं सूत्रम् ।

४. पिबा सोममिन्द्र मन्दतुत्वेति ।

५. होत्रा याज्याया वषट्कारे सजपेन कृते प्राक् अनुवषट्कारात् । प्रासर्पकाः प्रेङ्खं अश्नन्ति ईषदिमुञ्चन्ति ।

६. आगच्छन्तमध्वर्युं [समाहृतभक्षहस्तं ज्ञात्वा प्रेङ्खात्प्राङ्][3] प्रेङ्खसंनिधावेवारोहति[4] । न तु धिष्ण्योपरि ।

७. धिष्ण्यस्य पश्चात्सुखासनार्थम् ।

८. ग्रहं प्रतिगृह्णन् यमिमं प्रजयमिति मन्त्रं जपति ।

---

१ A ins. आत्मनि प्रत्यृचमुपस्पृष्टा चो । २ A संपत्त्ये C संपत्तेये । ३ C om. the words enclosed in brackets. ४ A अवरोहति ।

९. प्रकृत्यनुवादः क्रमार्थः।

१०. अस्मिन्नहनि भवतीत्यर्थः।

११. तस्यातियाह्यस्य उप मा यन्तु मज्जय इत्येवमादिना मन्त्रेण भक्षः कार्यः।

१२. क्रमार्थो ऽनुवादः।

१३. प्रकृत्यनुवादसहितविशेषेण सम्यक् प्रोक्तमिति।

---

## २२.

१. अथ माध्यन्दिनसवनक्लृप्तेरनन्तरम्। अतो हेतोर्यतो माध्यन्दिनं सवनं क्लृप्तमित्यर्थः। अतस्तृतीयसवनं कल्पते।

२. प्रकृत्यनुवादो विस्पष्टार्थः।

३. एष प्रतिपदनुचरलक्षणो विधिर्नित्य[1] एकाहात्प्रकृतिभूतादग्निष्टोमात्तायते[2]। अत्रापि क्रियते।

४. सुगमार्थम्।

५. इदमपि तथा।

६. इदमपि तथा।

७. एतस्मिन्सूक्ते एतावान्विशेषः। ऋग्द्वयमर्धर्चशः शस्यं छन्दोविशेषत्वात्। इतरासां पच्छो ऽविशेषात्[3]।

---

१ A नित्य एव यत एकाहात्प्र। २ A om. तायते। ३ A ऽविशेषात्। A adds the following passage: इदं च सूक्तं सलिलसंबन्धि गौरिर्मिमाय सलिलानीति नक्षत्यायाम्ब्वभिधानात् सलिलस्थानापन्नत्वाच्च सूक्तस्य तथा च श्रुतिः सलिलं ह्येतद्देवानामिति।

८. ऐकाहिके निविदं दधातीति श्रुतेः ।

९. यद्यपि पञ्चजनीया परिधानीया सर्वत्र वैश्वदेवस्येत्युक्तं तथापि विस्पष्टार्थमनूद्यते ।

१०. इतिशब्देन तत्सवितुर्वृणीमह इत्यादि सर्वं परामृश्यते। एवंविधमत्र वैश्वदेवशस्त्रं भवति ।

---

२३.

१. अथानन्तरमाग्निमारुतं शस्त्रं वक्ष्यत इति शेषः ।

२. सुगमार्थमेतत् ।

३. इदमपि विस्पष्टार्थम् ।

४. ते सामगा यदि यज्ञायज्ञीयमग्निष्टोमसाम कुर्वन्ति ।

५. यज्ञा यज्ञा वो अग्नये देवो वो द्रविणोदा इति स्तोत्रियानुरूपौ प्रगाथौ यज्ञायज्ञीयस्येत्युक्तम् ( ८. ६. ५ ) ।

६. प्रगाथानां ककुप्कारशंसनमुक्त्वा सर्वत्र यज्ञायज्ञीयस्येत्युक्तम् ।

७. [1]यदि सामगा इलांदसंज्ञकमग्निष्टोमसाम कुर्युरिति शेषः। तथा सति किं स्यादित्याह ।

८. संलग्नौ स्तोत्रियानुरूपावित्यर्थः ।

९. छन्दोगापेक्षया विकल्पः ।

१०. [अग्ने तवेत्यादीनां द्वादशानामृचां शंसनप्रकार इत्यर्थः।

---

१ C अग्निष्टोमसामे इलांदं साम कु० ।

इत्यादं सामाग्ने तवेति प्रथमे तृचे गेयमिति पञ्चे उक्तौ स्तोत्रियानुरूपौ। यदि त्वम्ने तवेति तृचद्वये स्तुवीरंस्तदाग्ने तवेति षट् स्तोत्रिय अग्निनेति षडनुरूप इति ][1] प्राप्तमेवैतद्विस्पष्टार्थमनूद्यते।

११. छन्दोगा यदि अतिच्छन्दःसु अग्निष्टोमसाम कुर्वन्ति।

१२. एतावपि संलग्नावेव स्तोत्रियानुरूपौ। कियांस्तु विशेषस्तमाह।

१३. अतिधृतिच्छन्दस्त्वात्षष्ठीमुद्धृत्य तत्स्थाने सप्तमीं कृत्वा एवंविधो ऽनुरूपः कार्यः।

१४. छन्दोगापेक्षया विकल्पः।

१५. विविधास्चत्वारो ऽर्धर्चा भवन्ति यस्मिन् शंसने तद्विचतुरम्। एकेनावसाय सप्तपदानां द्वाभ्यां प्रणौति द्वाभ्यामवसाय द्वाभ्यामिति (७. २ ६. ११) शस्त्रधर्मेण न पदं च पुनःपदं चान्तरेणावान्यादिति (कौ० ब्र० २ ३. ६) पदपुनःपदमध्ये ऽवसानरहितविशिष्टाश्चत्वारो ऽर्धर्चा भवन्ति यस्मिञ्छस्त्रे तदेवंविधं विचतुरं शस्त्रम्। शंसनमतिच्छन्दसामग्निं होतारं मन्ये दास्वन्तमित्यादीनां स्तोत्रियानुरूपाणां भवतीति प्राप्तमेवानूद्यते। अपूर्वस्यार्थान्तरस्यासंभवात्।

१६. बृहद्रथन्तरपृष्ठव्यतिरेकेण योन्यनुशंसनस्य निषेधो ऽस्ति। अतो ऽत्रापि योन्यनुशंसनं निषिध्यते। न ह्यन्येषां पृष्ठानां योनिः शस्या भवतीति ह स्माह कौषीतकिरिति श्रुतेः।

---

१ The words enclosed in brackets are omitted in C.

१७. सूक्तं भवतीत्यर्थः ।

१८. वैश्वानराय पृथुपाजसे प्रयज्यवो मरुतो यजिष्ठमित्येतान्याग्निमारुतशस्त्रे निविद्धानानि सूक्तान्युक्तानि ।

१९. इतिशब्देन मरुत्वतीयप्रभृतीन्येतस्याह्नः सर्वाणि सूक्तान्युक्तानीत्यर्थः ।

२०. तदेतदहरग्निष्टोमसंस्थं भवतीत्यर्थः। छन्दोगवशादुक्थ्यसंस्थं[1] भवतीत्यर्थः। अथ यद्यभिजितं (१२. २७. ४) विषुवन्तं बृहत्पृष्ठं विश्वजितं महाव्रतीयमहरित्युक्थ्यानि कुर्युस्तातुर्विंशिकान्युक्थ्यानीत्युक्तम् ।

२१. अग्निष्टोमसंस्थमेतदहः परिसमाप्य प्राक् प्रातरनुवाककालादेतां[2] रात्रिं वसन्ति निर्व्यापारा यथासुखं स्वपन्ति सत्रिणः।

---

२४.

१. सत्रिण इति शेषः ।

२. यः प्रायणीयो निर्ज्ञातस्वरूपः । उदयनीयोऽपि स एव। विशेषस्तूच्यते ।

३. तत्रोदयनीयातिरात्रे मैत्रावरुणः सर्वान्करस्थान्संबाध्य वस्त्रादिना बद्ध्वा प्रेषानाह । यद्यपि करस्थौ बाह्य कर्मणा प्रस्थातारा-

---

[1] C ins. चपि । [2] C ०त्रादेः ।

विति करखशब्दो बाहुवचनस्तथाप्यत्र तदवयवभूतानां नखानां वाचकः करखानिति बहुवचनानुपपत्तेः[१] । करे खान्ति रुहन्तीति करखा[२] नखा धातूनामनेकार्थत्वात् । बहुकरखसंप्रेषणप्रयोजनमदृष्टोत्पत्तिरेव ।

४. ते दीक्षिता गवामयनस्य प्रथमे मासे दीक्षितवसनानि दीक्षाकाले यानि[३] धृतानि तान्येव वसते वसनार्थं धारयन्ति । वाशब्दो ऽत्रावधारणे ।

५. तानि प्रथममासधृतानि दीक्षितवसनानि नवरात्रार्थं कस्मिंश्चित्प्रदेशे स्थापयन्ति ।

६. यानि दीक्षितवसनानि प्रथममासि धृतानि नवरात्रार्थं निहितानि तान्युत्तममासे परिधानार्थं धारयन्ति । केचिदुत्तराय च मासायेत्येवं पठन्ति । तदयुक्तम् । उत्तरमासस्य नवरात्रान्तर्गतत्वाद्विषुवतः परेषु चतुर्व्यहःसु पुनर्विधानं व्यर्थं स्यात् । तथा पूर्वोत्तरपटलयोर्दीक्षितवसनपरिधाने वैषम्यं स्यात् । यथा[४] प्रथमपटले प्रथममासे दीक्षितवसनानि धृतानि पुनश्च विषुवतः पूर्वेषु चतुर्व्यहःसु नवरात्रैकदेशभूतेषु एवमेवोत्तरपटले ऽपि विषुवतः परेषु चतुर्व्यहःसु दीक्षितवसनानि धृत्वा उत्तममासे द्वात्रिंशदहरात्मके धारयितव्यानि । उत्तराय च मासायेत्येतस्मिन्पाठे एवं न स्यात् । अतश्च वैषम्यम् । तस्मादुत्तमाय च मासायेत्ययमेव पाठः साधीयान् ।

---

१ A ०पत्तः । २ C ins. न । ३ C om. वे and यानि ।
४ C ins. हि ।

७. अथेतराग्प्रथमोत्तममासनवरात्रवर्जितान् दश मासान् अजिनानि पाविन्त्रात्[१] कृष्णाजिनानि दीक्षाष्टतव्यतिरिक्तानि परिधानयोग्यानि कृत्वा वा वसते परिधत्ते। अथवा आर्द्राण्युदकक्लिन्नानि वसनानि वसते परिधत्ते। एवं मासविशेषे वसनविधौ[२] दृष्टप्रयोजनाभावाददृष्टं कल्पनीयम्।

८. तस्मिन्नुदयनीयातिरात्रे संस्थितकर्माणि समाप्तिसंबन्धीनि कर्माणि क्रियन्ते ऽध्वर्य्वादिभिः।

९. अहर्गणे व्युत्क्रामतायन्वहं वसतीवरीग्रहणं चेत्युक्तं (१३. ४. २७. २८) कातीयसूत्रे। तदेतस्मिन्न भवति।

१०. इह मद[३] एव मघवन्नित्यतिप्रैषमाह द्वितीयप्रभृतिष्विति (१०. १. ११) यदुक्तं तदिह न भवति।

११. सत्त्रिण इति प्रैषः। सर्वेषां यागाधिकाराद्बहुवचनम्।

१२. सत्त्रिणस्समसाध्वर्यवस्य।

१३. सत्त्रिभिरिति प्रैषः।

१४. ते दीक्षिता यदि यज्ञागारेषु समहाव्रतं सत्त्रान्तरं प्रारब्धुकामा भवेयुस्तथा सति प्रेङ्खमिश्रमादधत एव। डुधाञ् धारणपोषणयोरिति धारणार्थो दधातिरिह ज्ञातव्यः।

१५. यदि सत्त्रान्तरमारप्स्यमाना न[४] भवेयुस्तथा सत्यादीप्य[५] प्रविशन्तीत्युक्तत्वात्सर्वान्यज्ञागारानग्निसात्कुर्वते। तथा सति प्रेङ्खफलकमपि तत्रैव प्रक्षेप्तव्यमित्यर्थः।

---

१ A पाविनात्। २ C वसनविशेषविधौ। ३ C इदमद।
४ C om. न। ५ A चादिष्टं।

१६. अवभृथमवैतीत्यत्र निर्ज्ञातपदार्थस्वरूपः।

१७. प्रायणीययोदयनीया व्याख्यातेत्यत्र।

१८. मैत्रावरुणी वशानूबन्ध्या पयस्या वेत्यत्र।

१९. व्यत्ययो बहुलमिति तस्या इति षष्ठ्यर्थे चतुर्थी। अनूबन्ध्याया वपाकर्मणि समाप्ते[1]। वेदेरर्धद्वयमस्ति उत्तरार्धं दक्षिणार्धं च दक्षिणार्धे ऽप्यर्धद्वयम्। पूर्वार्धमपरार्धं च। तस्माद्दक्षिणापरार्धाद्बहिः[2] पश्चाद्भागे पटकुटीं[3] कृत्वा सर्वे दीक्षिताः केशश्मश्रुवपनं कुर्वते।

२०. वैधवपनं कक्षगुह्यवर्जमिति निषेधो ऽस्ति। तद्बोधनार्थं सर्वाणीत्युक्तम्।

२१. स्नातिप्राप्तमपि विशिष्टस्नानार्थमनूद्यते। विशेषश्च बहुकालमस्नातत्वात्सर्वमलापकर्षः।

२२. चन्दनकेसरसुगन्धितिलकमाल्यसुवर्णवस्त्रसुवर्णाभरणादिभिः स्वशरीराणि सुभूषितानि कुर्युः। स्नानमलंकरणं च पत्नीनामपि समानं मलिनताविशेषात्।

२३. स्वलंकृता दीक्षिता उष्णीषान् शिरोवेष्टनानि पर्यस्यन्ति बध्नन्ति। आ केशानां संजननात्। केशोत्पत्तिं मर्यादीकृत्य।

२४. परिशेषं वपायागोत्तरानुष्ठेयं कर्मशेषम्। अनूबन्ध्यायै अनूबन्ध्यायाः संस्थापयन्ति समापयन्ति।

२५. हृदयशूलान्ता अनूबन्ध्या संतिष्ठते समाप्यते।

---

१ A समाप्ती C समाप्तौ। २ A वेदे instead of बहिः। ३ A पर्यङ्कुटीं।

२६. तस्यामनूबन्ध्यायां संस्थितायां समाप्तायां गृहपत्यरण्योः यथासंप्रकीर्णमेकीकृतानामग्नीनां समारोपं कृत्वा ततः।

२७. गृहपतिप्रभृतयश्चात्वालोत्करावन्तरेण उपनिष्क्रमणं कुर्वन्ति।

२८. सात्त्विकदेवयजनप्रदेशादुत्तरत उत्तरस्मिन्प्रदेशे उद्धतावोक्षिते सप्तदश अग्न्यायतनानि अग्निस्थानानि कृत्वा ततः।

२९. तानि गोमयोपलिप्तानि कृत्वा।

३०. तत उदवसानीयेष्टिमुपक्रम्य गृहपत्यरण्योः सर्वेषां मन्थनं कृत्वा गृहपतिप्रभृतयः स्वान् स्वानग्नीन्संस्थापयन्ति।

३१. प्रणीताप्रणयनं कृत्वा गृह्येतिकर्तव्यतया इदं विष्णुरित्यनेन सर्वे पूर्णाहुतीर्जुह्वति।

३२. नाना उदवसानीयाभिरिष्टिभिर्यजेरन्। य आहिताग्नयो भवन्तीत्यनेन अनाहिताग्नीनामपि सत्त्रासनं दर्शयति।

३३. ये अनाहिताग्नयः सत्त्रिणस्ते गृहपतिमेव उदवसानीययेष्ट्या[1] उपासीरन्। उदवसानीयाकाले गृहपतिसमीपे उपविशन्तीत्यर्थः। गृहपतिमेवेत्येवकारकरणं नेदिष्ठिप्रतिषेधार्थम्। मुख्यं गृहपतिमेव न नेदिष्ठिनमिति। अथवा तद्देवत्यैः स्थालीपाकैर्यजेरन्ननाहिताग्नय इति छान्दोग्यभाष्ये।

३४. उत्थाय साग्निष्टोमः सहस्रदक्षिणः पृष्ठ्यशमनीय[2] इति (१२. १४. ७) य उक्तस्तस्य इच्छयानुष्ठानं भवति।

---

१ A °ष्टा। २ Mss. पृष्ठ्य°।

२५. विकल्पेन न भवतीत्यर्थः ।

२६. यस्मिन्पक्षे यजेत तस्मिन्पक्षे एते एव सत्त्रिण ऋत्विजो भवन्ति । स काममेवेत्याद्येकवचननिर्वादेन[१] गृहपतेरेव पृष्ठशमनीयो[२] भवतीत्यवसीयते । अस्य गृहपतेः पृष्ठशमनीययागे एते एव सत्त्रिण ऋत्विजः स्युरित्यर्थः । सत्त्रिणः सत्त्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति । शाखान्तरश्रुतेस्तु एकैको यजमान अन्यानन्यान्षोडशषोडश ऋत्विजो वृत्वा पृथक् पृथक् पृष्ठशमनीयं करोतीत्यपि च ।

२७. तेभ्यः सत्त्रर्त्विग्भ्यः तद्दशाद्देयं स्यात् पृष्ठशमनीये । सहस्रं गावो विभज्य देया इत्यर्थः ।

२८. अत्र उदयनीयातिरात्रसमाप्तौ[३] संवत्सरसत्त्रं समाप्तं भवतीत्यर्थः ।

२९. अथशब्दो मङ्गलार्थः । अतः होत्रनुष्ठानविचारानन्तरं होत्राणामेव मीमांसा होत्रकाणामेव विचारो ऽवशिष्टः । तस्मातः । तस्य होत्रकानुष्ठानस्य अत एव उक्तादेव शास्त्रान्निर्वाह इत्यर्थः । यथा । ऐकाहिकं वा (११. १०. ६) प्रातःसवनमित्यत्र वाशब्दस्यावधारणार्थत्वात् प्रातःसवने होत्रकाणामैकाहिकान्येव शस्त्राणि । चतुर्विंशे ऽभिजिति विषुवति बृहत्पृष्ठे विश्वजिति महाव्रते च षष्ठादिति (१२. ६. ७) माध्यन्दिने सवने[४] पार्ष्ठिकात्षष्ठादेव ।

---

१ A ०देन C ०वेन । २ Mss. ष्ठ throughout. ३ C ०रात्रि० ।
४ C उत्तरयोः सवनयोः instead of माध्यन्दिने सवने ।

अथ यद्यभिजितं विषुवन्तं बृहत्पृष्ठं विश्वजितं महाव्रतीयमहरित्युक्थ्यानि (१२. २७. ४) कुर्युश्चातुर्विंशिकान्युक्थानीत्युक्थ्यसंस्थे चातुर्विंशिकानीत्यादि ।

द्विरभ्यासो ऽध्यायपरिसमाप्तौ शिष्टाचारस्तदाचरणं चायुष्यमिति ।

इति महाव्रतभाष्ये द्वितीयो ऽध्यायः[१]
समाप्तः ।

१ A °कल्पसूत्रव्याख्यायामष्टा° C इति शाङ्खायनसूत्रभाष्ये ऽष्टादशो ऽध्यायः ।

## CORRECTIONS.

| | | | | | | |
|---|---|---|---|---|---|---|
| P. 7, | line 8 | read | वीणा॰ | instead of | | वीणा॰ |
| ,, 13 | ,, 21 | ,, | C | ,, | ,, | A C om. |
| ,, 14 | ,, 16 | ,, | ऽदृशे॰ | | | |
| ,, 38 | ,, 4 | ,, | संभ्रमम् सं मयाम् | | | |
| ,, 61 | ,, 18 | ,, | सुखा॰ | | | |

# APPENDIX I A

## Corrections by Caland[1] with their criticism

### VOL. II

| | | | | | |
|---|---|---|---|---|---|
| Page | 3 | line | 16 | read | हौत्रादिना |
| ,, | 63 | ,, | 13 | | C wrongly suggests यजन्य: for यघन्य:. यघन्य: is a misprint for यद्यन्य: which is noted in the Errata by Hillebrandt himself. |
| ,, | 108 | ,, | 15 | ,, | तद्धीयते |
| ,, | 119 | ,, | 14 | ,, | यद्वो for यज्ञो |
| ,, | 124 | ,, | 1 | | C suggests सुतृप्तो for सुतृप्तता. Obviously सुतृप्ततो is a printing mistake for सुतृप्तो, but सुतृप्तता is better than सुतृप्तो. |
| ,, | 156 | ,, | 11 | ,, | उपवायात्सो |
| ,, | 210 | ,, | 9 | ,, | perhaps संसृज्य |
| ,, | 215 | ,, | 16 | ,, | षडेव for पडेव |
| ,, | 281 | ,, | 6 | ,, | शक्वरीं मुक्त्वा (Śakvarī is a printing mistake for Śakvarīṁ). |
| ,, | 305 | ,, | 16 | ,, | perhaps मात्रानुया- |
| ,, | 319 | ,, | 9 | ,, | मैधातिथ्येव |
| ,, | 321 | ,, | 7 | ,, | तूष्णींशंसाख्यमग्नि |
| ,, | 331 | ,, | 4 | ,, | प्रक्षरन्तीषु |
| ,, | 333 | ,, | 2 | ,, | प्रतिषेधार्थम् |
| ,, | 359 | ,, | 12 | ,, | नेष्ट |

### VOL. III

| | | | | | |
|---|---|---|---|---|---|
| Page | 34 | line | 5 | read | ते श्व for तेभ्य. C suggests तेष्व which seems a printing error. |
| ,, | 63 | ,, | 4 | | C separates प्रतिभाहानि:, but this does not seem to be correct. |
| ,, | 63 | ,, | 4/5 | | C reads अन्यो विनियुक्त: in place of अन्योऽविनियुक्त:. |
| ,, | 107 | ,, | 18 | | separate स मास |
| ,, | 115 | ,, | 10 | | remove ऽपि |
| ,, | 161 | ,, | 13 | | C suggests ततस्ततीये for ततस्तृतीये, but I fail to understand why. |

1. See Introduction to the English tr. of शांखायन श्रौतसूत्र by Caland.

| | | | | | |
|---|---|---|---|---|---|
| Page | 190 | line | 5 | read | उत्तरलिचाऽवक्ष्राद्येति |
| ,, | 192 | ,, | 1 | | C suggests होतुरिक्षोपक्षानं for होतुरिक्षोपक्षानं, but I fail to understand why. |
| ,, | 335 | ,, | 9 | ,, | -जिगायैतयर्चा |
| ,, | 338 | ,, | 10 | ,, | perhaps तस्मान्मारणात्मकस्य |
| ,, | 347 | ,, | 10 | ,, | वैश्रवणो |
| ,, | 350 | ,, | 10 | ,, | perhaps पितृत्र्यम्बकपुन- |
| ,, | 374 | ,, | 5 | | separate यजमानमेकैकया भिषज्यन्ति |
| ,, | 383 | ,, | 14 | ,, | ऽश्वलोहितं |
| ,, | 391 | ,, | 10 | ,, | वा यथोक्ते |

## APPENDIX I B (Additional Corrigenda)

(f. b.=from below)

### VOL. II

| | | | | | |
|---|---|---|---|---|---|
| Errata, | | line | 5 f.b. | read | and 304 line 5 dele (०) |
| Page | 1 | line | 1 | | I think अभ्युदयनिःश्रेयस- would be the correct reading. |
| ,, | 2 | ,, | 11-12 | | The reference is to शब्रा (5. 3. 2. 2, 4) which reads प्रसजति for प्रसृजति. |
| ,, | 3 | ,, | 4 | | विशिष्टसंनिवेशः शरीरस्थसूत्रो should form one word. शरीरस्थं सूत्रं शरीरस्थसूत्रं, विशिष्टः संनिवेशः यस्य तत् विशिष्टसंनिवेशं, विशिष्टसंनिवेशं शरीरस्थसूत्रं यस्य स विशिष्टसंनिवेशशरीरस्थसूत्रः . |
| ,, | 3 | ,, | 9-10 | | उपवीतं देवानामित्यादि—the reference is to तैसं (2. 5. 11. 1). |
| ,, | 91 | ,, | 4 | read | उपस्रष्टारो for उपसृष्टारो |
| ,, | 91 | ,, | 2 f.b. | ,, | ब्रा० for ब्र० |
| ,, | 92 | ,, | 1 | ,, | ततः for तत |
| ,, | 92 | ,, | 4 | ,, | मासमग्निहोत्रं for मांसमग्निहोत्रं, see तांब्रा (25.4.1) |
| ,, | 117 | ,, | 7 | ,, | -वेलां is the correct reading. Cf. the original sūtra and the भाष्य on the next sūtra. |
| ,, | 153 | ,, | 8 | ,, | द्वन्द्वपर्यये for द्वन्द्वपर्यते |

### VOL. III

| | | | | | |
|---|---|---|---|---|---|
| Page | 206 | line | 7 f.b. | read | सुरुंगायाम् for सुरुंगयाम् |
| ,, | 206 | ,, | 8 | ,, ,, | मन्त्रेण for मन्त्रे |
| ,, | 399 | ,, | 8 | ,, | समाप्तः for सामाप्तः |